ओ३म्


# गुरुकुल-पत्रिका

[ गुरुकुल कांगड़ी विश्वविद्यालयस्य मासिक पत्रिका ]

फाल्गुन २०२४, फरवरी-मार्च १९६८, वर्षम् २०, अङ्कः ७, पूर्णाङ्कः २३५


## श्रुति-सुधा

(ऋषि –मेधातिथि. काण्व. । देवता–ऋभव । छन्द – गायत्री)

उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ।
अकर्त चतुरः पुनः ॥ ऋ० १।२०।६

( उत ) और ( त्वष्टु देवस्य ) त्वष्टा देव के ( निष्कृतम् ) निष्पन्न निर्मित ( त्यं ) उस ( नवं चमसं ) नवीन मस्तिष्क को तुमने ( पुनः ) फिर ( चतुर. अकर्त ) चार में विभक्त कर दिया ।

चमस तथा त्वष्टा के सम्बन्ध में हमने ऋभु देवता नामक अपनी पुस्तक में विस्तार से विचार किया है । यहां हम संक्षेप में अन्य विचार प्रकट करते हैं । त्वष्टा भगवान् संसार में समग्र पदार्थों के तक्षण करने उनको रूप देने वाले हैं । मानव-शरीर के भी ये निर्माता हैं । उन्होंने स्त्री-गर्भ में नया चमस अर्थात् नया प्रारम्भिक मस्तिष्क दिया । मस्तिष्क चमस ( चमचा ) है अर्थात् मस्तिष्क में विद्यमान देव इसके द्वारा सोम का पान करते हैं । अतः इसे देवपान भी कहा है । इस देवपान चमस के ऋभु लोग चार विभाग करते हैं । ऋभु देवता नामक पुस्तक में हमने चार वर्णों में विभक्त करने का भाव लिया है, यहां हम दूसरा भाव दिखाते हैं । द्युलोक के तीन विभाग माने हैं । ( अवमा, पीलुमती, प्रद्यौ ) इसी प्रकार द्युलोकस्थानी मस्तिष्क के भी ३ विभाग माने गये हैं । इन तीनों का ऊर्ध्व में उद्घाटन करना इन्हें ४ भागों में विभक्त करना है । द्युलोक से ऊपर का क्षेत्र इनके लिये खोलना है । इस प्रकार ये "चतुर्वयम्" चार क्षेत्रों में व्याप्त होने वाले हो जाते हैं । चार भागों में इनकी व्याप्ति ऋत से देदीप्यमान ज्ञानरश्मियां करती हैं ।

( गताङ्कतोऽग्रे )

# मम संस्कृतोत्कर्षवृत्तान्तः

श्री विश्वनाथ केशव छत्रे, जोगेलकरवाडा, सिद्धेश्वर आल, कल्याण ( जि० ठाणे )

३० उत्साहभंगकरा. प्रसंगाः

इदानी केचन अनपेक्षिताः प्रतिकूलाश्च अनुभवा. निवेद्यंते। उत्साहभगकरा अपि ते मया सर्वथा उपेक्षिता धैर्येण च मार्गक्रमणं कृतम्।

## निर्विकारः पंडितवरः

१ कस्यचित् सुरभारतीप्रणयिनः सुहृदः निवास गतवान् अहं, सुभाषचरितस्य आद्यरचनां तस्मै दर्शयितुम्। तत्र पूर्वम् एव आगताय तस्य संबंधिने--संस्कृतपंडिताय मदीयरचनां दर्शयितुम् आदिष्टोऽहं सुहृदा तथा अकरवम्। परं हन्त ! तिष्ठता एव तेन पंडितवरेण निमेषपचकं हस्तलिखिते सकृत् दृष्टि प्रक्षिप्य, निर्विकारवदनेन समौनं च मे प्रत्यर्पित तद्। ये आद्यश्लोका प० श्री. महादेवशास्त्रि--जोशीभ्यः श्राविताः-- तेषां हृदय संस्पृश्य प्रशंसोद्गारान् तैः अवादयन्, ते एव अस्मिन् पंडितवरे कथं परिणामशून्याः अभवन् इति अनाकलनीय खलु गूढम् !।

## शुद्धीकरणं तु विदूषणीकरणम्

२ शुद्धीकरणहेतुना कस्मैचिद् विद्वत्सुहृदे मया आद्यसर्गद्वयस्य हस्तलिखित दत्तम्। पुनः यदा तम् अहमपश्यम् तदा स उवाच 'इदानी भवान् सेवानिवृत्तः, अतः सर्वापि रचना सुखेन भूयः कर्तव्या इति सूचयामि।' विद्यमानायां रचनायां के दोषाः, कथं च ते परिहर्तव्या इति पृष्ठः सः यद् दोषशुद्धीकरण सूचितवान्, तन्नून छंदोभगकारि, विदूषणीकरणं च मे प्रतीतम् !। अन्यथा मम साहाय्यकर्तापि सः अनुपयोगी शुद्धीकरणे इति विज्ञाय गु० श्री. राजा रामपंत-- किजवडेकरशास्त्रिणां साहाय्यमर्थितवान् तत् यथेप्सितं च लब्ध्वा समादधेऽहम्। प्रकाशितं तदेव सुभाषचरित अन्यत्र दृष्ट्वा--विशेषतश्च भारतसर्वकारस्य अनुदानेन गौरवितं तत् इति श्रुत्वा--सः एव सुहृद् आश्चर्यचकितः बभूव।

परपीडां न यो वेत्ति विद्वान् स्वाचरणोद्भवाम्।
बोधितोऽपि न मार्दवेष स्वभिधानं किमर्हति ॥६॥

३ कस्यचित् संस्कृतपत्रस्य प्रारभतः ग्राहक लेखकश्च इति द्विप्रकाराभ्यां चिरसबद्धेन मया, स्थाने अपेक्षितं संपादकाना साहाय्य सुभाषचरित-प्रकाशनविषये। तेषाम् आदौ समतिमवाप्य सुवाच्य सकलमपि हस्तलिखितं मया प्रेष्य भूयः पृष्टवानह 'किं स्वीक्रियते तस्य प्रकाशन, किया-नर्थश्च मत्त अपेक्ष्यते'। इति पर, हंत ! न केवल सपूर्णं मौनम् अवलंबितं तैः संपादकैः, पर हस्त-लिखितप्रत्यर्पणेऽपि मे प्रदीर्घकालः वृथा यापितः, अय जनश्च सामर्थ्यातिरिक्तं श्रामितः भूय स्मरणपत्रलेखैः तथा मम तत्रत्य-संबधिजनश्च बहुवारं गतागतैः तेषां निवासं प्रति।

४ तत स्वावलंबनपूर्वक 'सुभाषचरितम्' मया मुद्रापितम्। अत्रांतरे नासिकनगरे महाराष्ट्र--संस्कृत--साहित्य--संमेलनम् नचिरात्--मे १९६३ मासांते--भविष्यति इति ज्ञात्वा तस्य संचालकाः प्रार्थिताः मया सुभाषचरित-प्रकाशनविषये संमेलनमध्ये। तैः तथा कर्तुं प्रतिश्रुत्योपि प्रत्यक्षं नैव कृतं मंदतमस्वरेण पुस्तकनामोल्लेखादधिकम् !। ( उपरिनिर्दिष्टाः संपादकमहाशया. संचालकेषु कार्यकर्तारः आसन् इति अत्र अवधेयम्) एवं सर्वथा उपेक्षां गतं मत्कार्यं मम एव जन्मस्थाने !

इदानीं भगवंतम् एवमेव प्रार्थये। 'मम कवितालेखादिसाहित्यं सादरं नित्यं प्रकाश्य मम

संस्कृतोत्कर्षाय साहाय्य कृतवद्भ्य एभ्य संपादक-सुहृद्वरेभ्यः सुबुद्धि कृपया देहि, प्राप्तलेखानां संरक्षणे, अस्वीकार्याणां शीघ्रप्रत्यर्पणे, तथा कस्यापि प्रार्थनायाः मान्यामान्यता-निर्णयविषये नि संकोचविज्ञापने, इति ।

३१ कै० श्री० काकासाहेबगाडगील-महोदयानाम् उदारहृदयत्वम्

महाराष्ट्रीयाणाम् अभिमानी उत्कर्षाय साहाय्यप्रदश्च इति कै० श्री० न० वि० गाडगील ( काकासाहेब ) महोदयानां ख्याति श्रुत्वा पूर्वम् अपरिचिताः अपि ते विज्ञापिता मया. मम विविध-संस्कृत-रचना-विषये, प्रार्थिताश्च ग्रंथ-प्रकाशनाय यथोचित साहाय्यम् अर्पयितुम् । तै बिना विलंबं प्रत्युत्तरितम् 'यथाशक्ति साहाय्यम् अवश्यं करिष्यामि, इति । पंजाबराज्यपालपद-स्थिता अपि ते प्रत्युत्तरप्रेषणे सदा दक्षाः प्रतीताः । अनावृतमपि मत्पत्रं ते सादर पठन्ति, कार्यबाहुल्यव्यापृता. अपि । पुण्यपत्तनम्, आगताश्च ते विनाविलंब दर्शनसुलभाः स्वगृहे, यदि न बहिर्गता. । एवं तै सह कंचित्कालं पत्रव्यवहारं कृत्वा मया प्रार्थितं यद् श्रीजवाहरलालजन्माहे मया गीर्वाणवाग्-निबद्धं तद्-गौरवकाव्य मुख्यामात्याय समर्प्य अनुग्राह्यः अय जन. इति । श्रीकाकामहोदयं सत्वरं तद् अनुमत्य मत्काव्यं समर्पितं दापित च स्वाक्षरीयुक्तं प्राप्तिपत्रं श्री जवाहरलालमहोदयेभ्यः । १२ नो०हेंबर १९५७ दिनांकितम् एतत्पत्रं देदीप्यमानं रत्नं खलु मत्संग्रहे वर्तमाने महापुरुषलेखरत्नभाडारे । इद काव्यं प्रकाशितं गुरुकुलपत्रिका--नो० हे०-डिसे० १९६४ अंके ।

सुभाषचरितमुद्रापनाय सप्ताष्टशतरुप्यक-द्रव्यव्ययस्य साहसं यदहं कर्तुं प्रवृत्तः अभवम्, तद् दृढविश्वासेन यत् श्री काकामहोदयाः भारतसर्व-कार-शिक्षणमंत्रालयात् तदर्थम् अनुदान मे दाप-यितु प्रयतेरन् यशस्वितया इति । एवं मम सदैव हितकारिभ्य. तेभ्य 'सुभाषचरित-समर्पणम्' मया सकृतज्ञभाव कृतम् । तैश्च त्यक्तोच्चपदैरपि मत्कृते प्रशस्तिपरं पत्र सुभाषचरित-काव्यग्रंथेन सह डॉ० श्री० राधाकृष्णन् महोदयान्-राष्ट्रपति-पदं भूषयत -प्रति प्रेष्य सत्वरं दशोनपञ्चशतरूप्य-काणाम् ( रु० ४९० ) अनुदानं मे दापित भारतसर्वकारात् । एकदा तेषां गृहे सोपानपर-पराम् आरुह्य कासपीडया कष्टेन श्वसंतं मां विलोक्य ते अवदन् 'अहं सानंदम् आगमिष्यम् नीचैः यदि आहूत. अभविष्यम्' । कियती इय वत्सलता तेषां, पीडितार्थं निरहंकारिता च ! तेषां श्रद्धाञ्जलिकाव्ये मया उक्तं भावाकुलित-हृदयेन एवम्--

"तस्मिन्नूनं गुणिनि गुणवत्प्रेम दुष्प्राप्यमुर्व्यां
साहाय्यार्त्या सह गुणिजनैर्नित्यमेवानुभूतम् ।"
'नरेण म्रियेतेह कीर्त्या तु जीवेत् ।'

इति मनोबोधे प्रथिता श्री रामदासोक्ति
तैः सार्थतां नीता ॥

इति पूर्वार्धः--

★

# आचार्यवर्याय श्री० काका कालेलकर महाभागाय

## स्वागतप्रसूनाञ्जलिः

सौराष्ट्र-प्रांते पोरबदरपत्तने स्त्रीशिक्षण-विषये महनीयं कार्यं संपादयतः आर्य कन्यागुरुकुल-महाविद्यालयस्य वार्षिकोत्सव-समारभः आचार्यप्रवराणां विद्वत्-कुलावतंसानां श्री काकाकालेलकर-महाभागानां साभापत्ये चारुतया निष्पन्नः । तस्मिन् शुभप्रसगे गुरुकुल-विद्यामन्दिरस्य मुख्याधिष्ठात्रा बन्धुवर्येण श्री शंकरदेव विद्यालंकारेण यः स्वागत-प्रसून-संभारः सुरभारत्यां समुपकल्पित सोऽत्र उपन्यस्यते । सुरवाणीप्रणयिनां प्रमोदाय कल्पिष्यते--

--संपादकः

---०---

धन्येयं शारदी शोभा, धन्या पुण्या वसुंधरा ।
तपोवनेऽस्मिन् संप्राप्त सत्कृतः परिव्राजकः ।।
प्रसन्नः मधुरो वाग्मी, प्रेक्षावान् शिष्यवत्सलः ।
शीलेन प्रज्ञया वंद्यः वदान्यः गुरुसत्तम ।।
अद्य न. हृदय तुष्टं, अद्य नः सफल मनः ।
श्रुतेन तपसा चायं नमस्यः समुपागतः ।।
भाविकां रचयित्रीं च, जुषाणः प्रतिभां कलां ।
संगतोऽयं गुरुर्दिष्ट्या, सारस्वत-धुरि स्थितः ।।
धूलिभिर्यस्य पादस्य, पावनं ज्ञानमन्दिरम् ।
जंगमः ज्ञानकोषोऽय, ऋषिकल्पोऽत्र राजते ।।

× × ×

सुदृढा सम्मति र्यस्य, साहित्यं जीवनाय वै ।
चतुर्वर्गफलप्राप्त्यै, मागल्याय च कल्पते ।।
प्रसन्ना मधुरा रम्या, पावना शीतला तथा ।
गद्य-मंदाकिनी यस्य, पद्यबंधाद् विशिष्यते ।।
'जीवनस्य विकासेन,' भाति 'जीवन-संस्कृति' ।
गायन्ती 'जीवनानंद' यस्य, 'जीवन-भारती' ।।
पुरुषार्थस्य पंथान, दिशन्ती लोक-नंदिनी ।
लोकसतर्पका शश्वत्, काव्यानंदाय कल्पते ।।
सारस्वत-निकुंजे वै, सहकार-समावृते ।
कलितां काकलिं कुर्वन्, कोविदः कोकिलायते ।।
पुण्यं यो भारतं लोक, भ्रामंभ्रामं विलोकयन् ।
प्रबंधैः ललितैः हृद्यैः, गायं गायं प्रमोदते ।।

पर्वताना, नदीनां च, स्रोतसां सरसां तथा ।
मग्धेन मनसा विज्ञः, महिमानमगायत ।।
निखिल भारतं वर्ष, स्ताव स्तावं प्रमोदयन् ।
कृष्ण-द्वैपायनो मन्ये, तपोवनमुपागत ।
यस्य 'जीवनलीला' वै, जायते चित्तनंदिनी ।
तज्जयन्तो निखिलं लोकं, पावनीं धन्यतां गता ।।
बोधिता भवता सम्यक् 'जीवनस्य व्यवस्थितिः' ।
तत्त्वतो व्याकृत इत्थं, कृत्स्नं जीवन-दर्शनम् ।।

\+ + +

दाक्षिण्यं भाष्यकर्तृत्वं, गांधी-तत्त्व-विवेचने ।
विश्रुतं विज्ञ-गोष्ठीषु, कोविदैः परिकीर्त्यते ।।
यस्य संस्कृति-वैदुष्यं, प्रथितं तत्त्व-दर्शनम् ।
नमोभिरभिनन्दामः, आचार्यं प्रियदर्शनम् ।।

\+ + +

पुण्ये साभ्रमती तीरे, राष्ट्रशिक्षण-कर्मणि ।
चिरं येन तपस्तप्तं, प्रबोधं प्रापिता प्रजाः ।।
आचारः ग्राहितो येन, विनये स्थापिताः प्रजाः ।
विद्यापीठं यशो लेभे, यस्य प्रज्ञा-प्रभावतः ।।
प्रज्ञा शीलवते तस्मै, आशया मुदितात्मने ।
शांताय मुनिकल्पाय, नमस्या संप्रदीयते ।।
धर्मशास्त्रे पुराणे च, ऐतिह्ये संस्कृतौ तथा ।
प्रतिभा सर्वतो भद्रा, विदग्धैरभिनन्द्यते ।।

गृहेषु पडिताःकेविद्, केचिद् ग्रामेषु पडिता ।
सभायां पडिता केविद् 'काका' सर्वत्र पडितः ।।
समन्वयस्य स्देश, सदिशन् विश्वशांतये ।
विश्वनागरिको नून, प्रकृत्या कर्मणा तथा ।।
भद्र वांछति सर्वेषां, ऋषि-कल्पस्तपोधनः ।
भद्र भद्रं सदा ब्रूते, भद्रकारी महामना ।।
प्रज्ञा-सस्कार-नेताऽयं, शकराय प्रियकरः ।
आश्रमवासिनःसर्वान्, आशिषा सयुनक्तु नः ।।
मनसा कर्मणा वाचा, शुचिमान् लोकसग्रहो ।
आरोग्य लभतां वंद्यः, शतायुष्यं नु विन्दताम् ।।

'मन्निधे' वननिकुंजे मजु गुंजन् हे चचरीकचुञ्चु ।
अभिनन्दति नः चित्त, वार वार त्वदागमनम् ।।

आचार्य वर्य प्रथित-प्रभाव
विद्याश्रमेऽस्मिन् समुपागत वै ।
सारस्वतानां धुरि कीर्तनीयं
पूजा-प्रसूनांजलिभि र्नमाम ।।

( उपश्लोकयिता—विद्यालङ्कारः शकरदेवः )

शुभाशंसा

विजहतु भुवि भद्राः दीर्घनिद्रामिदानीं
पुनरपि सुरबाणी साहितो मानमेतु ।
इह विविध-दुराशा कष्टसंबाध-जुष्ट
त्रिभुवन-मणिभूतं जायतां भारत नः ।।

—o—

# सावधान

मेरे नाम से "औरफेनेज चेरीटी बोडिंग ( रजि० नं० ८० एक्ट २१ के १८६० ) नाम की बोगस संस्था की रसीद बुक, नीचे मेरा नाम मैनेजर, आनंदप्रिय, अंग्रेजी में छाप कर, कांगली बाग, आत्माराम गेट बड़ौदा ओफ गायकवाड़ ऐसा पता छाप कर, दान के नाम पर एक ठगों को टोली पैसा एकत्रित कर रही है। मैं ऐसी कोई संस्था नहीं चलाता। यह मेरे नाम से पैसा एकत्रित करने का बदमाशों का षड़यत्र है। इस प्रकार पैसा मागने वालो को दान न दें और उसे पकड़ कर पुलिस को सौप दें।

आनंदप्रिय
मन्त्री
आर्य कन्या महाविद्यालय कांगली बाग बड़ौदा ( गुजरात )

# 'सूक्तिप्रशस्तिः'

रचयिता:—भारतशतकप्रणेता कवीशः रामकैलाश पाण्डेयः एम०ए०, शास्त्री ।
भारतीयविद्याभवनविद्याश्रमः बटोदरम् ।

या वृन्दारकवृन्दवाग्विलसिता भावैः पराध्यैर्भृता
या मोद जनयन्ति हृत्सु च सता नव्याः सदा चापि या. ।
या नाम्नैव पुनन्ति कर्णकुहरं प्रीति किरन्त्यः परा
जृम्भन्ता भुवि काव्यपृष्ठपतिता भव्याश्च ता. सूक्तयः ॥१॥

धन्यास्ते कवयोऽद्य यैर्विलिखिता दीव्यन्ति सम्प्रत्यपि
शिक्षादानविचक्षणा नयपरा ज्ञानाञ्चिताः सूक्तय ।
याभिः सूक्तिभिरन्धकारनिचयोऽज्ञानोद्भवो भिद्यते
याभिर्जागरिता भवन्ति मनुजा भूता भविष्यन्ति च ॥२॥

आचारं दिशसि प्रमाणभरितैर्वाक्यैरहो ज्ञानदे !
सन्मार्ग नयसि प्रियैर्नवनवैरच्छैरनूनैर्गुणै. ।
लोकं शिक्षयसि स्वकीयचरितं पूतं प्रमोदप्रद
भो· सूक्ते कुरुषे न किं त्वमिह किं स्वानल्पलीलालयै. ॥३॥

नो द्राक्षाफलमप्यहो मधुयुत नास्तीक्षुकाण्डे रसो
न स्वाद्वस्ति गवां पयश्च फलमप्याम्रस्य नानन्ददम् ।
धिग्धिक् कोकिलपञ्चमस्वरलय केकेऽस्ति ते का गति·
सर्व सूक्तिरसोऽप्यतीत्य महसा मूर्ध्नि स्थितो मोदते ॥४॥

धर्मस्याचरणं परोपकरणं नीतिश्च सामाजिकी
प्रज्ञाया महिमा विवेकसरणिश्चाध्यात्मिकी संस्थितिः ।
आदर्शोऽनुपमः कलापरिणतिश्चातुर्यचर्याचयः
सूक्ते ! सर्वमिदं त्वयीव समयेऽप्यस्मिन्नरीनृत्यते ॥५॥

——०——

# संस्कृतभाषायाः पत्रकारिताक्रमविकाशः

( ले० विद्याभूषण श्रीगणेशरामशर्मा, डूंगरपुरम् )

## भारते पत्रकारिता

भारते पत्रकारिता यूरोपीयैरांग्लशासकैः सहात्राजगाम । एकोनविंशत्याः शताब्द्याः प्रारम्भकाले, यदास्माक देशेऽत्र भारतवर्षे गौराङ्गानां शासनं स्थिरतां दृढतां चापेदं, तदाग्लशासकैस्तैः शासनाङ्गं सूचनाविज्ञप्त्यादेशादीनां प्रसारणाय 'गजट' इत्याख्यं राजपत्रं प्रकाश्य प्रसारितम् । सर्वादौ कालिकातानगरात्, तत क्रमेण सर्वेष्वपि प्रान्तेषु गजटसंज्ञकाना राजपत्राणा सम्पादनम्, प्रकाशनं, प्रसारण च तेषामाग्लशासकानाम् प्रशासकीयनीतेरनुरोधात् तात्त्विकमनिवार्यं च समभूत् । तानीमानि राजपत्राण्येवात्रास्माकं देशे प्रारम्भिकानि पत्राणि पत्रत्वेन प्रचकाशिरे । इत्थं क्रमेण सर्वादावांग्लभाषाया माध्यमेनैवात्र देशे पत्राणां सम्पादनस्य, प्रकाशनस्य, प्रसारणस्य च सूत्रपातो बभूव ।

ततस्तत्कालीनैर्विद्वद्भिर्देशभक्तैश्च कैश्चिद् बङ्गीय- पारसीक- हिन्दी-गुर्जरी-महाराष्ट्रीप्रभृतीनां प्रादेशिकीनां भाषाणां माध्यमेन स्व-स्व-प्रान्तेषु साक्षरताविकाशाय, शिक्षावृद्धये तथा च समाज-सुधार-सङ्घटनाद्युद्देश्यैः पत्राणां सम्पादन, प्रकाशन, प्रसारणं च प्रारब्धम् । एवं क्रमेण महाराष्ट्रीगुर्जरीत्यादीनां भारतदेशस्यास्य सर्वप्रान्तीयभाषाणा पत्रसम्पादनस्य सूत्रपातोऽजायत ।

तत पुनरत्र देशेऽस्माक यदा कांग्रेसनाम्न्या भारतीयराष्ट्रियमहासभायाः स्थापना समभूत्तदा नवजागरणस्योन्मेषात् संस्थाया अस्या वैधानिकत्वापादनानुरोधाच्च विधिविधान-प्रस्ताव-विज्ञप्ति-कार्यक्रम-विवरणादीनां प्रचारप्रसारावश्यकतयांऽऽग्लभाषायामिव प्रादेशिकीष्वपि भाषासु पत्रसम्पादनोपक्रमः प्रारेभे । एवं क्रमेण यथा यथात्रदेशे सैषा राष्ट्रियमहासभा काग्रेसाख्या स्वविकाशमासादयन्ती ववृधे, यथा यथा चात्र देशे राष्ट्रियताभावा, स्वदेशभक्ति, समाजसुधाराः, शिक्षाप्रसाराः, सङ्घटनभावना, राजनैतिको चेतना स्वातन्त्र्यभावनाः, स्वराज्याप्तिसमुद्यमाः क्रान्त्यान्दोलनानि च विकाशमापेदिरे, तथा तथा तत्वैरेतैः सहैव भारतीया पत्रकारिता नवजागरणप्रतीकमिव सर्वतः प्रगतिशीलतामाससाद । इदानी म एष भारतीयपत्रकारिताया वटवृक्षो महान् वाञ्छनीयं प्रोज्ज्वलमूर्ज्जस्वलं विकाशमाप्तो नानाशाखाप्रशाखासनाथ पल्लवित पुष्पित सफलश्चास्माकं पुरतो भास्वरस्वरूपो विजयतेतमाम् ।

### संस्कृतपत्राणामाविर्भावः

अथोपर्युक्तायां तथाविधाया पृष्ठभूमौ तादृशे च देशे काले पात्रे परिस्थितिवातावरणे च संस्कृतभाषायाः पत्राणामपि सम्पादन, प्रकाशन विंशत्याः शताब्द्या प्रारम्भकाले समभूत् । यद्यपि वयमत्र निश्चयेनेदमित्थं वक्तु नोत्सहामहे यद्धि संस्कृतभाषायाः किं नाम पत्र सर्वाद्यमाविरासीत्तथा को नु खलु महानुभावः सर्वाद्यः सम्पादको विरेजे, तथापि विषयेऽत्र निसर्गतोऽनुरागात्, स्वाभाविक्या प्रवृत्तेश्च हेतो कासाचित् संस्कृतपत्रपत्रिकाणां नामानि गुरुजनेभ्य. परम्पराप्राप्तानि श्रावं श्रावं जानीमहे, कानिचित् संस्कृतपत्राणामभिधानानि सुहृद्बन्धुभ्य शृणुमः, कानिचित् स्वयं दृष्ट्वा पठित्वा च विद्मो नूनम् । यावज्ज्ञात तेषामत्रोल्लेख क्रियते विषयप्रवेशसौकर्याय । । प्रयासेनानेन विशेषज्ञा अस्मद्बन्धवः संस्कृतपत्रकारिताया विकाशक्रमतन्तून् संयोज्य

प्रामाणिकेन प्रकारेण किमपि साधिकारं वक्तुं पारयेयुः । सम्भवति, यदत्र येषां पत्राणाम्, सम्पादकानां च स्मरणं नामग्रहणमुल्लेखश्च क्रियते ततोऽतिरिक्तमपि कानिचित् पत्राणि सम्पादका वा श्रृङ्खलायामस्यां स्थानधिकारिणो गणनीया मान्याश्च स्युः । परन्त्वत्राल्पज्ञेन मया पङ्क्तीनामासां लेखकेन श्रुतचराणां ज्ञाताभिधेयानां संस्कृतपत्रपत्रिकासु समुल्लिखितानामेव सादर नामस्मरण क्रियते येन विषयस्यास्य स्पष्टीकरणे प्रकाशः साहाय्यं चोपलभ्येत ।

अस्माक मान्या गुरुकल्पाश्चापि लेखनीसुहृद स्वर्गीया महामहोपाध्यायाः पण्डितनारायणशास्त्रिखिस्तेमहाभागा यदा वाराणसेयराजकीयसंस्कृतमहाविद्यालयाद् अमरभारतो नाम्नीं मासिकीं संस्कृतभाषायाः पत्रिकां सम्पाद्य संस्कृतपत्रकारत्वेन सुरभारतीं सेवितुं प्रवृत्तास्तदा पत्रिकायास्तस्याः प्रादुर्भावकाले ( संवत् १९९१, कार्तिक-मार्गशीर्षौ, सन् १९३४ नवम्बर-दिसम्बर ) ततः पूर्वं जातानां कासांचित् संस्कृतभाषायाः पत्रिकाणां, पत्राणां, तत्सम्पादकानां च नामावलीं सादर सश्रद्धं च स्मेरुः । विषयस्यास्य स्पष्टीकरणाय, प्रकरणेऽत्रानिवार्यतया च सम्पादकधुरीणानां खिस्तेमहाभागानां लेखनीप्रसूतममरभारत्या आद्याङ्के प्रकाशित प्राक्कथनरूप सम्पादकीय वक्तव्यमिहांशत सादर समुद्धराम--"स्वर्गवासिनो महाविदुषो हृषीकेशशास्त्रिणो विग्रहवती कीर्तिरिव विद्योदयो न केषामपि विदुषामपरिचितः । विद्योदयेन विना कृता विद्वज्जनता नूनं दिङ्मोहमुपगतेव वभ्रमीति सम्प्रति । श्रीमज्जयचन्द्रसिद्धान्तभूषणपुरस्कृतस्य वाचस्पतेरप्पाशास्त्रिराशिवडेकरमहाभागस्य संस्कृतचन्द्रिकाऽऽत्मको महानुद्यमो न कैरपि विस्मर्तुं शक्योऽमरभारतीप्रणयिभिः । सहृदया तु तिरोहिता सती धुनोत्येव सहृदयानां चेतांसि । मञ्जुभाषिणी को न स्मरेद्रसिकः ! शारदयापि शारदम्भचपलया सत्यमुत्कण्ठामापादितो रसिकलोक. । रघुपतिवर्णसंस्मारिकया काव्यकादम्बिन्या विहीनाः कवयः सम्प्रति तप्यन्त एव । गुर्जरदेशे नडियादनगरादचिरादाविर्भूता पीयूषपत्रिकाऽपि कांश्चिदेव पीयूषबिन्दून् सहृदयान् पाययित्वा तिरोदधे । इत्थमन्यान्यपि बहूनि सुरगवीपत्राणि तत्र तत्र तदा तदा लब्धास्पदानि कियन्त चित्कालं विद्युत्य क्षणप्रभालीलामन्वकुर्वत ।

"भगवतो नवचन्द्रमौलेर्विश्वेश्वरस्य मोक्षराजधान्यामस्यां सुरलोकातिशायिन्या वाराणस्यामपि बहोः कालात् पूर्वं तात्कालिकविद्वत्कविचक्रवर्तिभिः काशिकराजकीयसंस्कृतपाठशालासंसृष्टा काशीविद्यासुधानिधि–नाम्नी पण्डितपत्रिकापराख्या प्रवर्तितासीन्मासिक पत्रिका । मन्ये, सकलसंस्कृतपत्रिकाणामादर्शभूता गुरुस्थानीयेव सेति । कालप्रभावादस्त गतापि स्वकीयपुरातनसञ्चिकाभिः शिक्षयतीव लेखसौष्ठवगाम्भीर्यमाधुर्याण्यधुनातनानस्मान् । ततः परं काशिकबङ्गीयविपश्चिद्भिः प्रवर्तिता मित्रगोष्ठी चिराय रञ्जयति स्म चेतांसि सज्जनानाम् । साऽपि हन्त ! निलीनाभूच्चिक्रूपेव विहाय क्रन्दत स्वीयस्तनन्धयान् । अथ महामहिमशालिभिः काशिकै साहित्यसाम्राज्यधुर्धरैर्विद्वत्कविचक्रवर्तिभिः सोत्साह निर्मथ्य साहित्यसागर प्रवर्तिता सूक्तिसुधाऽपि वर्षद्वयमेव ध्रियते स्म । दुर्भाग्याद्रसिकलोकस्य साहाय्यविरहक्षामक्षामा सापि जगामापुनरावर्तनं धाम । सूक्तिसुधया किल वर्षद्वयावधिकेऽपि स्वजीवने यानि काव्यरत्नान्याविष्कृतानि, न तथाविधानि पुनः सुलभानीति वदतां नः स्फुटतीव हा, हन्त ! हृदयम् !! तत्रत्यां शिवाश्वघाटीं के वाऽनुकर्तुं प्रभवेयुः ! अलिविलासिसंलापकमाकलयन् को

नाम सचेतास्तस्य निस्तुलतां नानुवदेत् ! अभिनवबृहत्कथयापि विस्मारितो भट्टसोमदेवोऽपि । बहवः कवय सुलेखकाश्च जनिताः सूक्तिसुधयाऽल्पीयसि स्वसमये । अन्तर्हिताया तस्यां चिराय शून्यमेवासीत् सुरगो. पत्रिकाक्षेत्रम् ।

"अथ नव्यैः प्रभूतोत्साहैर्विपश्चित्प्रवरैः प्रवर्तितस्य संस्कृतसाहित्यसमाजस्य मुखपत्रात्मना प्रचलितं सुप्रभातम् नाम संस्कृतमासिकपत्रं कियन्तिचिद् वर्षाणि सुललितेन लेखजालेन विनोदयच्चेतो रसिकानां शोभनायति सम्भावना जनयति स्म चेतसि । वर्तमानकालानुरूपां सर्वतोमुखी कान्ति कामयमानैस्तदधिकारिभिः प्राच्यपथप्रदूषणैर्जनतायाम् जागरायां जनितायामपि साहाय्यविरहान्मध्ये कञ्चित्काल विश्रान्तिराश्रिता सुप्रभातेन । प्रभूतोत्साहस्तदीयसम्पादको नूनमसङ्ख्यान् धन्यवादानर्हति यत्तेन तथाभूतेऽप्यवस्थान्तरे प्रयत्नातिरेकैर्धनिकेभ्यः किमपि साहाय्यमासाद्य सम्प्रति पाक्षिकं सुप्रभात प्रचाल्यते । आशास्महे, यदेतदमरभारतीमात्मन कनीयसीं स्वसारमिव सम्भाव्य तदभ्युन्नतौ न प्रातिकूल्यमाचरेदिति । भारतधर्ममहामण्डलस्यच्छत्रच्छायायां निरगल प्रचलन् सनातनधर्मानुसारिणाम् प्राच्यपथाध्वगानां मतमनुवदन् सूर्योदय. किल मान्यतमो ज्येष्ठोऽमरभारत्याः सहोदर एव । आत्मानमनुसरन्त्याः कनीयस्याः स्वसुः सौभाग्यसम्वर्धनाय प्रयतन तस्यावश्यकर्तव्यमेव तेन पूरयिष्यमाणं वय सम्भावयामहे । जयपुरीयविद्वत्कविचक्रवर्तिभि सोत्साह प्रचारितो, मध्ये कियन्तं चित्कालमन्तर्हितोऽपि भूय आविर्भूतोऽनेकलेखमौक्तिकमालालङ्कृतो हि संस्कृतरत्नाकर एकल एव सम्प्रति गोर्वाणभारतीगौरव प्रथयन् वर्द्धते । कालिकातास्थविद्वद्वृन्दसम्पादिता संस्कृतसाहित्यपरिषत्पत्रिकापि बङ्गीयविपश्चिद्विद्यागौरवं दिगन्तविश्रुत विदधती विद्योतते । काशीस्थब्राह्मणमहासम्मेलन तु प्रायो धार्मिकसाहित्यमात्रप्रकाशकं धर्मरक्षणक्षेत्रे रविरिव प्रकाशते ।

"इयानेव सस्कृतपत्रिकाणां साधारण इतिहासः । विस्मरणेन यासां पत्रिकाणां नामानुकीर्तन कर्तुं नापार्यत, तत्सम्पादकवर्यैर्वयम् क्षन्तव्या इति तान् साञ्जलिबन्ध समभ्यर्थयामहे ।"

अत्र स्वर्गीयैर्महामहोपाध्यायैर्नारायणशास्त्रिखिस्तेमहाभागैर्विहङ्गमालोकनं कुर्वद्भिः सस्कृतभाषायाः पत्रपत्रिकाणां यासा नामोल्लेखो व्याधायि, ता एव पत्रपत्रिका संस्कृतपत्रकारिताया प्रारम्भकालोना इति वय स्वीकर्तुमर्हामः । प्रसङ्गेऽत्र सवत् १९९६वर्षस्य वैशाखमासत प्रकाशितायाः सर्वतन्त्रस्वतन्त्रैर्महादेवशास्त्रिभिस्तथा माधवप्रसादमिश्रैर्बलदेवप्रसादमिश्रै रामजीपाण्डेयशास्त्रिभिजितेन्द्रियाचार्यप्रभृतिभिर्मान्यैर्मनीषिजनैः सम्पाद्य प्रकाशिताया. संस्कृतभाषाया ज्योतिष्मती पत्रिकाया. शुभाभिधान वयमत्र सादर स्मरामः । एवमेव–उच्छृङ्खल पत्रमपि प्रसङ्गेऽत्र स्मरणार्हम् । एतत्पर्यन्त येषां पत्राणामत्रोल्लेखोऽक्रियत तान्येव पत्राणि सस्कृतपत्रकारिताया क्रमविकाशपरम्परायामाद्यकालीनानि पत्राणीत्यवधारयितुमुचित स्यात् ।

ततस्तु सस्कृतपत्रपत्रिकाणामभ्युदयक्रमविकाशः साधीयसी गतिशीलतामाससाद । फलतोऽद्यत्वे भारते देशेऽस्माकमनेकानि सस्कृतभाषापत्राणि समर्थैर्विद्वद्भिः सम्पादकैः सम्पाद्यमानानि, प्रकाश्यमाणानि, सञ्चार्यमाणानि च विजयन्तेतमाम् । अधुनात्र देशे प्रकाश व्रजत्सु सस्कृतपत्रेषु कानिचिच्छाण्मासिकानि, त्रैमासिकानि, मासिकानि, पाक्षिकानि, साप्ताहिकानि, दैनिकानि च वर्तन्ते । अत्र तेषामपि लेखकेन

पङ्क्तीनामासां मया यावज्ज्ञातानामुल्लेखः सर्वेक्षणदृशाऽऽवश्यक इति तद्विषये किमप्युच्यतेऽधस्तात्—

अथ साहित्य-अकादेमी, नवदेहलीति सुप्रसिद्धाया अखिलभारतीयसाहित्यसंस्थाया सरक्षकत्वे तथा च प्रख्यातस्य संस्कृतविदुषो डाक्तरवर्यस्य श्री वी. राधवन् महाभागस्य सम्पादकत्वे संस्कृतप्रतिभा नाम्नी षाण्मासिकी पत्रिकातीवोच्चस्तरीया प्रौढा च प्रकाश्यमाणा विद्यते। षाण्मासिकीषु संस्कृतपत्रिकासु सेयं संस्कृतप्रतिभा किलैकला विजयते।

सस्कृतभाषायास्त्रैमासिक्यः काश्चन पत्रिका विविधप्रदेशानां विद्वद्भिरुत्साहवद्भिः संस्थाभिश्च प्रकाश्यमाणाः सम्पाद्यमानाश्च विद्यन्ते खलु। तासु गैर्वाणी इत्याख्या त्रैमासिकी संस्कृतपत्रिका, सस्कृतभाषाप्रचारिणीसभा, चित्तूरु (आन्ध्रप्रदेश) द्वारा सम्पाद्यमाना तत्रत्यैर्विद्वद्भिः प्रकाश्यमाणा च वर्तते। स्वाध्यायमण्डल, पारडी ( सूरत ) इत्यस्मात् सुविख्यातात् प्रतिष्ठानात् खलु वेदमूर्तीनां महर्षिकल्पानां महामहोपाध्यायपण्डितप्रवरश्री श्रीपाददामोदरसातवलेकरमहाभागानाम् तथा श्री श्रुतिशीलशर्ममहाशयानां सहसम्पादकत्वे च अमृतलता त्रैमासिकी पत्रिकोत्तमा प्रकाशते। पत्रिकाया अस्याः किलामृतलतायाः परामर्शदातृमण्डलमपि विद्यते, यस्य सदस्या महामहोपाध्यायाः पद्मभूषणश्रीदत्तोवामनपोतदारमहाभागा, स्वर्गीया डाक्तरवर्या वासुदेवशरणाग्रवालमहोदया, डाक्तरवर्याः श्रीमङ्गलदेवशास्त्रिणो महाभागाः, पण्डितराजाः स्वामिवर्या श्रीभगवदाचार्यचरणा, डाक्तरवर्या श्रीसुधीरकुमारगुप्तमहाशयास्तथा मीमांसातीर्थ श्री श्रीपादशास्त्रिणो महोदयाश्च सन्ति। अथ विश्वेश्वरानन्दवैदिकशोधसंस्थान, होशिआरपुरत

( पञ्चाम्बुप्रदेशतः ) आचार्यवर्यश्रीविश्वबन्धुशास्त्रिमहाभागानां प्रधानसम्पादकत्वे तथा च प्राध्यापक श्रीशिवप्रसादभारद्वाजशास्त्रिमहोदयानामुपसम्पादकत्वे च विश्व-संस्कृतम् इति त्रैमासिकमतीव प्रौढविचारचारु प्रकाश्यमाणमास्ते। पत्रस्यास्य परामर्शदातृमण्डले डाक्तराः श्रीसिद्धेश्वरवर्माण शास्त्रिवर्या, डाक्तरश्रीनरेन्द्रनाथचौधरीमहोदया, डा. श्रीमङ्गलदेवशास्त्रिणः, डाक्तरश्रीअमलानन्दघोषमहाशया, आचार्यश्रीविश्वनाथशास्त्रिवर्या, आचार्य श्रीचारुदेवशास्त्रिपादा, आचार्य श्रीदीनानाथशास्त्रिसारस्वतमहाभागा, आचार्य श्री शिवनाथशर्माण. शास्त्रिवर्याश्चेत्येते सदस्याः सन्ति। सारस्वतीसुषमा इत्याख्या त्रैमासिकी पत्रिका सस्कृतविश्व-विद्यालय, वाराणसी कैण्ट, इत्यस्यानुसन्धानविभागत. प्राकाश्यं व्रजन्ती विद्यते। अथ भारतीयविद्याभवनम्, मोहमयीति सुप्रसिद्धाद्विद्यासंस्थानान्माननीयानां श्रीकन्हैयालालमाणिक्यलालमुंशीमहोदयाना सरक्षकत्वे, श्रीमज्जयन्तकृष्णहरिकृष्णदेवमहाभागानां सम्पादकत्वे सविदनाम्नी त्रैमासिकी पत्रिका रुचिररुचिरा सचित्रा च प्राकाश्यं व्रजन्ती वर्तते। अथ संस्कृतसाहित्यपरिषद्, दारागञ्ज, प्रयाग, इत्यस्याः संस्थायास्तत्त्वावधाने, श्रीमत्प्रभातशास्त्रिसाहित्याचार्यमहाभागानां सम्पादकत्वे तथा च श्रीतारिणीप्रसादझा व्याकरणवेदान्ताचार्याणां तथा च श्रीमज्जयशंकरत्रिपाठिसाहित्याचार्यवर्याणाम् सहसम्पादकत्वे संगमनी-नाम्नी त्रैमासिकी पत्रिका प्रकाश्यमाणा विलसति। अस्याः पत्रिकाया परामर्शदातृषु श्रीमन्तो बालकृष्णरावमहोदया, डाक्तरवर्याः श्रीहरवंशलालशर्माणस्तथा डाक्तरश्रीविद्यानिवासमिश्रा इत्येते विद्यन्ते। संस्कृत-परिषत्, सागर-विश्वविद्यालयः, सागरत.

( म.प्र. ) प्राकाश्यं व्रजन्ती सागरिकाऽऽख्या त्रैमासिकी पत्रिका गम्भीरविषयानुसन्धानपरा प्रकाशते। अथ विहार-राज्य-संस्कृत-साहित्य-सम्मेलनम् ( श्रीमुरारकासंस्कृतमहाविद्यालय ) चौक, पटनामिति, इत्यस्य विद्यासंस्थानस्य मुखपत्ररूपम् संस्कृतसम्मेलनम् इति त्रैमासिकं पत्र चापि प्रकाश्यमाणमास्ते। अस्य पत्रस्य सम्पादकमण्डलस्य सदस्याः श्रीरामपदार्थशर्माणः, श्रीजटाशंकर झा, श्रीपरमानन्दशास्त्री, श्रीचन्द्रकान्तपाण्डेयः, श्रीब्रह्मदत्तद्विवेदस्तथा च श्रीविक्रमसिंह इत्येते महानुभावाः सन्ति। अथ पश्चिमीयनिमाडगञ्ज, जबलपुरत श्रीकृष्णकान्त चतुर्वेद-श्रीमाहेश्वरीप्रसाद, श्रीउमाशंकरपाण्डेयादिभिः सम्पाद्यमाना ऋतम्भरा इत्याख्या त्रैमासिकी पत्रिका चापि प्राकाश्यं व्रजति। अथ सनातन-धर्मसभा, अहमदनगर ( महाराष्ट्रप्रदेश ) इत्यस्याः संस्थाया मुखपत्ररूपेण गुञ्जारवः इति त्रैमासिकं पत्र डाक्तरवर्याणां व. व्य झांबरेमहाभागानां सम्पादकत्वे, कालेश्वरमन्दिर घुमरेगल्ली, अहमदनगरतः प्रकाशते। पत्रिकाया अस्याः सम्पादकमण्डले––प्राध्यापक द. ग. जोशी, प्राध्यापक दे. खं. खरवडीकर, प्राध्यापक. म.ना. बोपर्डीकरः, प्राध्यापकः श्री म. केलकरः, तथा श्री पां.का. मुले इतीमे महानुभावा सदस्या वर्तन्ते। एवमेतासां त्रैमासिकीनाम् पत्रिकाणाम् परिचयोऽत्र प्रसङ्गे संस्कृतपत्रकारितायाः कर्मविकाशाङ्गेऽस्माभिरनुचिन्तनीयः।

( शेषागामिन्यङ्के )

★

# कायाकल्पकालः

श्री बुद्धदेवः 'संस्कृतविभागः' गुरुकुल कांगड़ी विश्वविद्यालय.

शाखाभ्य उड्डीय शनैर्धराया-
मनुक्रमेणावतरन्त्यनन्ता।
जीर्णच्छदा हैमखगा इवैते
पान्थस्य दृश्या दिवसावसाने ॥१॥

स्तम्भा अपर्णास्तनुतालसालाः
श्रान्ताय पान्थाय तमोवृताय
पदे पदे वैद्युतपक्वबल्ब-
फलानि भूयो ददतीव मार्गे ॥२॥

पलाशकाषायतरैः पतद्भिः
शकुन्तपक्षैरिव जीर्णपर्णैः।
दृषश्च बोधिद्रुमरीतिपीतैः
पान्थस्य पन्था रचनाविचित्रः ॥३॥

द्राक्षालतानां विटपा अपत्राः
सरीसृपाणां शिशवोऽतिशैत्यात्।
जडा दिने कुण्डलिनो लभन्ते
ध्रुवं कवोष्णातपवृष्टिहर्षम् ॥४॥

नदीव सिन्दूरमयी प्रतीची
प्रदोषकाषायितशान्तरूपा
पुनर्निशायां यमुनायमाना
सिन्धवम्बरे मज्जति मन्दमन्दम् ॥५॥

घनान्धधूमाभ्रनिभेन भूमि-
स्तुषारपातेन वृता विलुप्ता ।
दिनावसाने प्रलय गतेव
स्वप्नेन यामां नयति प्रवासी ॥६॥

स्वप्नोडुपेन त्वरितं कथंचि-
दुत्तीर्य यामायमुनां घनान्धाम्
प्रातःप्रयागे दिनयामगङ्गा-
मागत्य पान्थो लभते निवृत्तिम् ॥७॥

तिमिङ्गलोत्तुङ्गतरङ्गपङ्क्ति-
गम्भीरतायां स्तिमिता यथापाम् ।
तथैव चिन्ताजडचित्तपान्थः
शान्तो जगत्यां न वसन्निवायम् ॥८॥

क्वचिच्च पर्णैरतिपीतवर्णै
रम्याः प्रसूनैरिव मार्गवृक्षाः ।
कालान्तर तैः कपिशैश्च जातैः
काषायवेशाः स्थविरा पलाशाः ॥६॥

छायाः पदव्यां यदि रूक्षवृक्षाः
पङ्कायमाना दिवसे क्षिपेयुः ।
एतर्हि तर्हि स्वगृहं प्रवासी
कथं स गच्छेत् विवशः सुदूरम् ॥१०॥

दुकूलवस्त्रातपचारुखण्डैः
साकं नवीनैः पवनातिनुन्नैः ।
छाया विदीर्णा मलिनाः स्वकीया
सीव्यन्ति वृक्षा इव नग्नकाया ॥११॥

विधूर्णयन्तः पवनावधूताः
कङ्कालकल्पाबकुला अनल्पाः ।
यान्तीव वर्त्मोभयत पिशाचा
नृत्यन्त एते पथिकेन साकम् ॥१२॥

प्रकाशपूर्णार्कघटोऽतिताम्रो
भ्रष्टोऽस्तशैलावलिकूटकूलात् ।
सुदूरसिन्दूरसरित्प्रतीच्यां
सद्यस्तमो मेलयतीव पङ्कम् ॥१३॥

वह्निशार्शैवलिनीदशाशा-
धारासु ताराकुलडिम्बिका वं ।
चन्द्राकृतिः कुण्ठितकुप्यमुद्रा
च्युतेव छायापथधूलिपाल्याम् ॥१४॥

निशागुहाया बहिरेत्य पान्थो
नवीनजन्मेव पुनर्दिनादौ ।
मरीचिमाली पुलको दिशायाः
प्रीतिप्रतीतेरिव जातमूर्ति ॥१५॥

घनो भवेद् यत्र तुषारपातो
धून्यां ध्रुवं तत्र स धूमकेतुः ।
प्लुष्टा इलाश्यामलशस्यरोम-
मालाः प्रवासी न दिदृक्षमाण. ॥१६॥

आदर्शनीरे यमुनाप्रतीरे
समक्षमाक्षालितशुभ्ररूपः ।
प्रासादराजः शशिन किरीटी
ध्रुवं धरास्थापितताजनामा ॥१७॥

—o—

# श्री चैतन्यनीतिशतकम्

"श्री चैतन्य."

राजनीतिं परित्यज्य,
राज्य भवति निर्बलम् ।
विशालं बलयुक्तं वा,
रिपुभि पीड्यते सदा ॥२४०॥

महद्‌भिः पण्डितैर्युक्तो.
महाशूरैर्धनुर्धरैः ।
सम्पन्नो भारतो हन्त,
नीतिहीनः पराजित ॥२४१॥

यस्मिन् राज्ये प्रजा सर्वा,
राजभक्ता न दृश्यते ।
नीतिहीनं च तद्राज्य,
रिपुभि पीड्यते सदा ॥२४२॥

निर्धना जीविकाहीना,
रोगचिन्ता समन्विता ।
अशिक्षिता प्रजा सर्वा,
राजभक्ता न मन्यते ॥२४३॥

संघशक्तिर्बलं प्रोक्तम्,
अखिलैर्नयपण्डितै. ।
राज्यं सर्वप्रयत्नेन,
सघशक्ति समाश्रयेत् ॥२४४॥

शान्तिसंघं महासंघं,
स्थापयेद् वसुधातले ।
शान्तिसंघसहायेन,
विश्वशान्ति सुरक्षयेत् ॥२४५॥

नाशयेद् धर्मभेदं तु,
जातिभेदं तथैव च ।
सुराज्यं प्रान्तभेदं च,
भाषाभेदं समापयेत् ॥२४६॥

भेदयेत् भेदिकां भित्ति,
सघराज्यं महाबलम् ।
अपराधोऽयमक्षम्यो,
भेदभावप्रवर्तक ॥२४७॥

ग्रामवत् एकदेशोऽयं,
विज्ञेयः संघसेवकै. ।
एकत्वस्य ह्यभावे तु,
नश्यति राष्ट्रभावना ॥२४८॥

राष्ट्रभावे विनष्टे तु,
जातिभेद प्रवर्तते ।
जातयोऽपि विभज्यन्ते,
जायन्त उपजातय. ॥२४९॥

आगते जातिभेदे तु,
देशभक्तिर्विनश्यति ।
देशभक्तिविनाशेन,
मृतं राष्ट्रं हि गण्यते ॥२५०॥

स्वातन्त्र्यं मृतराष्ट्रस्य,
नश्यत्येव तु शत्रुभिः ।
तस्मात् सर्वप्रयत्नेन,
नाशयेद् भेदकण्टकान् ॥२५१॥

संघशक्तिबल प्रोक्तं,
प्रथमं नीतिसूत्रकम् ।
आधारः सर्वशक्तीनां,
पोषक राष्ट्ररक्षकम् ॥२५२॥

द्विविधाः शत्रवः प्रोक्ता,
बाह्याश्चाभ्यन्तरास्तथा ।
जागरूकः सदा भूत्वा,
शत्रुनाश समाचरेत् ॥२५३॥

राष्ट्रद्विषे क्षमावानं,
विषवद् घातकं परम् ।
महामूर्खाः खलु ज्ञेयाः,
शत्रुविश्वासकारकाः ॥२५४॥

शत्रुविश्वासमापन्नं,
मूढराज्यं हि गण्यते ।
नाश्यते रिपुभिर्नूनं,
कर्त्तव्यो नात्र संशयः ॥२५५॥

शत्रुसन्तोषिणीं नीतिं,
त्यजेद्राष्ट्रं दृढव्रतम् ।
शत्रुसन्तोषणेनैव,
वर्धन्ते शत्रव सदा ॥२५६॥

दण्डनीतिप्रयोगेण,
नाशयेद् राष्ट्रघातकान् ।
दण्डनीतिभयाद् दुष्टो,
शीघ्रं त्यजति दुष्टताम् ॥२५७॥

दण्डनीतिप्रयोगे तु,
निष्पक्षः साहसी भवेत् ।
राष्ट्रद्वेषिवधायैव,
दण्डं धर्मं विदुर्बुधाः ॥२५८॥

राष्ट्रद्वेषिजनेभ्यस्तु,
क्षमाभावो विनाशकः ।
पातकं कथ्यते घोरं,
प्रजापीडनकारकम् ॥२५९॥

भेदभावरता नित्यं,
भ्रष्टाचारयुता जनाः ।
देशभक्तिविहीनाश्च,
कथिता राष्ट्रशत्रवः ॥२६०॥

भेदभावरतं दुष्टं,
भ्रष्टाचारयुतं खलम् ।
देशद्रोहिनरं चैव,
मृत्युदण्डेन दण्डयेत् ॥२६१॥

अर्थलोभयुतं भ्रष्टं,
कर्त्तव्यात् पतितं परम् ।
कारागारे क्षिपेन्नूनं,
सुराज्य राजपूरुषम् ॥२६२॥

चारैस्तु चतुरैः पश्येत्,
प्रत्यहं देशद्रोहिणः ।
जालं गुप्तचराणां तु,
सर्वत्र स्थापयेद् दृढम् ॥२६३॥

नेत्रहीनो यथा प्राणी,
नक्षमं ह्यात्मरक्षणे ।
गुप्तैश्चारैर्विहीनं तु,
ध्रुवं राज्यं विनश्यति ॥२६४॥

ज्ञेयो गुप्तचरैर्युक्तो,
विभागो राष्ट्रनेत्रवत् ।
गुप्तैश्चारैर्विपश्यन्ति,
शासका देशद्रोहिणम् ॥२६५॥

मेरुदण्डाश्रयेणैव,
शरीरं धार्यते यथा ।
चतुरैश्चारकैर्युक्तं,
राष्ट्रं संरक्ष्यते तथा ॥२६६॥

चराणां तु विभागोऽयं,
प्रमुखो राष्ट्ररक्षकः ।
धनेन प्रचुरेणापि,
तस्मात् तं परिपोषयेत् ॥२६७॥

चौरं च हिंसकं क्रूरं,
बलात्कारिजनं खलम् ।
आततायिनरं राज्यं,
मृत्युदण्डेन दण्डयेत् ॥२६८॥

पापाचारिजनान् सर्वान्,
महादण्डेन दण्डयेत् ।
नागरुकः सदा भूत्वा,
दुष्टमन्वेषयेद्रिपुम् ॥२६९॥

(क्रमशः)

# अग्निसंहिता

मूललेखकः—श्री अरविन्दः, अनुवादकः मुखबन्धलेखकश्च श्री जगन्नाथो वेदालंकारः

## मुखबन्धः

विदितमेव वेदितव्यविदां विदुषां यत् महर्षिणा श्रीअरविन्देन वेदविषये सुबृहद् गम्भीरञ्च साहित्यं प्रणीतमाङ्गलभाषया । तत्र 'On the veda', 'Hymns to the mystic fire' इति ग्रन्थौ प्राधान्यं भजेते । अन्याश्च तस्य काश्चन लघुरचनाः—The Vamadeva Hymns to Agni, The First Rik of the Rigveda, Riks of Madhuchchhandas (Sri Aurobindo Mandir Annual, Jayanti Nos. 10 11 12, 15 Aug 1951 52, 53.) 'विविधरचना'–नामक–तदीय–बङ्गला–पुस्तकान्तर्गता नातिलघुनिबन्धाः इत्यादिकाः—अद्यापि पृथक्–पुस्तकाकारेण प्रकाशनं प्रतीक्षन्ते । एतदेव तस्य विपुलं वेदवाङ्मयमवलम्ब्य ब्रह्मश्रीकपालिशास्त्रिभिर्यद् ऋग्वेद-प्रथमाष्टकस्य सिद्धाञ्जनभाष्यं सुरभारत्या प्राणायि तदपि विश्रुतमेव वेदमनीषिषु । श्रीमदाचार्याऽभयदेवमहोदयैः उपरिनिर्दिष्टयो 'On the Veda', 'Hymns to the mystic fire' ग्रन्थयोः केचनांशा हिन्दीभाषया अनूदिता, 'वेद-रहस्य' इति नामकं पुस्तकरूपेण खण्डत्रयेण प्रकाशिताश्च हिन्दीभाषाभिज्ञानां वेदप्रेमिणां वेदामृतपिपासां प्रशमयन्तितराम् । परमिदं तदीयं महार्घवाङ्मयं संस्कृतगिरा नाद्यापि प्रकाशमायातम् ऋते कतिचिन्मन्त्रेभ्यः श्रीकपालिशास्त्रिकृतप्रथमाष्टकभाष्यगतेभ्यः । अपेक्ष्यते चास्य भारतीयसंस्कृतिमूलभित्तिभूतस्य वैदिकसाहित्यस्य संस्कृतावतारणमिति नात्र मतद्वयं संभाव्यते । तद्धि आङ्गलभाषानभिज्ञानां संस्कृतविदां श्रीमदरविन्दस्य वेदव्याख्यावगाहनलालसानां सुतरां सहायकं तृप्तिकरञ्च स्यात् । यत श्रीअरविन्देन वेदानां कोऽपि गुह्यार्थः साक्षात्कृतः, योगबलेन च तेषाम् आध्यात्मिकार्थस्य कुञ्चिका सम्प्राप्ता या स्कन्दस्वामिमहर्षि१ प्रभृतीनां भाष्यकाराणाम् अपि हस्तगता नाभूत्, का कथा सायणादीनाम् । श्रीअरविन्दकृता वेदव्याख्या मूलस्य मर्मविभेदिनी, मन्त्रशक्तेः साक्षात्कारकारिणी, आधुनिकविचारकाणामपि बुद्धिगम्या वर्तमानयुगानुरूपा च । अतोऽसौ सविशेषानुशीलनमर्हति सर्वेषामपि वेदप्रेमिणां विपश्चिताम्, येन ते संस्कृतमाध्यमेन श्रीअरविन्दस्य वेदविषयकविचारान् परिशील्य, तद्द्वारा यथार्थस्य वैदिकधर्मस्य स्वरूपं परिज्ञाय च तत्प्रसारेण भारतीयसंस्कृतौ नवजीवनं सञ्चारयेयुः भारतस्याभ्युदयञ्च सम्पादयेयुः । अनया दृष्ट्याऽस्माभिः तस्य वैदिककृतीनां संस्कृतरूपान्तरस्य प्रयास आरभ्यते । तत्रादौ 'Hymns to the Mystic Fire' नामकग्रन्थस्यानुवादो विधास्यते क्रमशः । तस्मिन् प्रायः सर्वेषामपि ऋग्वेदगताऽऽग्नेयसूक्तानामविकलोऽनुवादः तेन उपन्यस्तः, आङ्गलभाषया । तत्कृतानुवादस्यावबोधाय, अग्नेः आध्यात्मिकस्वरूप-कार्यव्यापारादीनां गुण-कर्म-स्वभावानां वा ज्ञानं नितान्तमावश्यकम् । तद्विना

१. श्रीमत्स्वामिदयानन्दसरस्वतीभिः वेदशब्दानां यौगिकार्थस्य कुञ्चिका सम्प्राप्ता प्रदत्ता चास्मभ्यमिति महर्षिश्रीअरविन्दपादैः प्रतिपन्नं स्वप्रणीत—'दयानन्द'—'वेदरहस्य'—नामक पुस्तकयोः । किन्तु वैदिकपदानां बहूनां प्रतीकात्मकार्थद्वारा वेदमन्त्राणां य उदात्ततम आध्यात्मिकार्थः प्रसिद्ध्यति तस्य कुञ्चिका श्रीअरविन्दपादै रस्मभ्यं प्रदत्ता ।

तु सोऽनुवादोऽनाविष्कृतगहनरहस्यमिव न कमपि रसमाववेत् स्वाध्यायकृताम् न चावेदयेदृचां परमोदात्तं गभीरमर्थम्। अतः प्रकृतग्रन्थस्य संस्कृतानुवादात् प्राक् तदुपोद्घातमुखेन अग्निदेवस्य स्वरूपव्यापारादिकं निरूप्यते महर्षिश्रीमदरविन्दग्रन्था[१]द्याधारेण ।

## अग्ने: स्वरूपम्

अथ कोऽयमग्निः य ऋग्वेदे सर्वप्रथममीडितः (अग्निमीडे), स्तुत, आवाहितः, प्रार्थित, कीर्तित, उपवर्णितश्च ? वैयाकरणास्तावत् अगि गत्यर्थे इत्यस्माद् धातो निष्पादयन्ति अग्निशब्दम्, अङ्गेर्नलोपश्च' इत्युणादिसूत्रञ्च तत्रोदाहरन्ति । श्रीअरविन्दोऽपि अग कुटिलायां गतौ यद्वा अगि गत्यर्थे इति धातोः निर्वक्ति अग्निपदम्, वक्ति च यदय धातु न खलु साधारणगतेर्वाचकः किन्तु शक्तिमत्त्वदीप्तिमत्त्वयुक्तगतिविशेषस्य इति प्राचीनार्यभाषाशाखीयानां गत्यर्थकधातूनां परीक्षणेन ज्ञायते । अगतेरङ्गतेर्वा शक्ति-दीप्ति-पुरोनयन-प्रचालनादिषु वर्तमानत्वात् अग्निशब्दः कामपि शक्तिं दीप्तिविशेषम्, आलोकं, ज्वालां, पूर्वत्वं प्रधानत्व च अभिधत्ते । वेदानामाध्यात्मिकार्थेऽय भागवत-तपः शक्तेः (Divine will or cosmic will), दिव्यसकल्पाग्ने ज्योतिर्मयसकल्पशक्तेर्वा (Illumined will or seer will) वाचक । अग्निर्नाम भगवतः ओजस्तेजोभ्राजस्वरूपा, सर्वज्ञानमण्डिता, परमज्ञानात्मिका तपश्शक्तिः या ज्ञानज्योतिषा प्रोज्ज्वलिता, ज्ञानस्य क्रियाशक्तिरूपा, जगतः सर्वासामपि अभिव्यक्तशक्तीनां मूलभूता प्रधानतमा च । वेदस्य शतशः सूक्तेषु अग्नेरिमे सर्वेऽपि गुणाः स्तुता वर्णिताश्च ।

किं नु खलु अस्याः तपः शक्तेः स्वरूपम् ? तत्सम्प्रति निरूप्यते । भगवतः चिच्छक्तिर्यदा 'सतः परमपुरुषस्य' अनन्तनामरूपाणां ध्यानं करोति तदा तस्यास्तत् नानामुख ध्यानं, स बहुमुखः समाधिरेव तपश्शक्तिनाम्ना आम्नायते । 'सत्' स्वरूपः पुरुषो यदा स्वचिच्छक्तिं कस्यापि नामरूपात्मकपदार्थस्य सर्जनाय, कस्यापि तत्त्वस्य विकासाय, कस्या अपि अवस्थायाः प्राप्तये वा समाहरति, प्रेरयति एकाग्री–करोति च तदा सा तपःशक्तिरूपेण परिणमते । इयमेव तपःशक्तिः (Divine will or cosmic will) जगत् सृजति, सञ्चालयति रक्षति च । अस्या एव नाम अग्निरिति ।

इयञ्च काऽपि दीप्तिशक्त्यात्मिका, मूर्तिमती, व्यक्तित्वमयी देवता न तु केवलं निराकारा शक्ति । इय परमदेवात् प्रथमोत्पन्ना शक्तिः । विश्वव्यापारसञ्चालनार्थम् आदिदेवात् याः शक्तयः अर्थात् देवताः उत्पन्नाः तासु इयमेव प्रथमं प्राप्तजन्मा, प्रधाना, पुरोहितरूपा च तासाम् । अन्ये सर्वेऽपि देवा चक्रनाभावरा इव अस्यां निहिताः ।

इय भागवतसंकल्पशक्तिः सदा सर्ववस्तुषु उपस्थिता, सर्वलोकेषु क्रियारता, सततं सर्जने विनाशे च, निर्माणे पूर्णत्वाऽऽदाने च व्यापृता, सृष्टेः जटिलविकासस्य सदैवाऽवलम्बभूता, तत्तद्बीजात् तत्तद्वृक्षस्य प्ररोहे नियामिका, तत्तत्कर्मणः तत्तत्फलविशेषस्य विधायिका व्यवस्थापिका च । इत्थञ्चेय वैदिकदेवतासु सर्वाधिकमहत्त्वशालिनी व्यापकतमा च ।

---

१. On the Veda, Hymns to the mystic fire 'विविध रचना' ( बङ्गभाषापुस्तक )-ऋग्वेदसिद्धाञ्जनभाष्यभूमिकादीनामाधारेण, अनेकत्र च तद्गतसन्दर्भाणामनुवादेन उद्धरणेन वा ।

अथेयं ब्रह्माण्डवत् पिण्डेऽपि प्रतिपलं क्रियापरायणा । इयमस्माकं सचेतनसत्ताया शक्तिर्या देहप्राणमनसा व्यापाराणां मूलप्रेरिका । प्राणस्य अर्थात् क्रियाशीलजीवनशक्तेः मूलस्थिता संकल्पशक्तिरियमेव । तत्र स्थितेयं स्वक्रियया प्राणं पवित्रयति । इयमेव नो मनसि सङ्कल्पतयाऽवस्थिता तस्मिन् पावित्र्यप्राप्तेः परमां स्पृहाम् ( अभीप्साम् ) समुत्पाद्य तन्निर्मलीकरोति । किम्बहुना, अस्माक कर्मसु अस्मन्मानवीयसकल्पस्य पृष्ठतो यस्तिष्ठति सोऽयमग्निरेव दिव्यसकल्पस्वरूपः ।

अतो यदा मर्त्यजातिः सचेतनतया महालक्ष्याभिमुखी भवति, स्वात्मनि दिव्यतां स्रष्टुं च प्रयतते तदा प्रथमतः प्रधानतश्च सा इममग्निदेवं प्रत्येव स्वविचारं प्रकाशयति । अयमेव अस्मत्प्रयत्नोच्चढेश्वराः सर्वा शक्तोः समुन्मूल्य अस्मल्लक्ष्यं प्रति अग्रतो नयत्यस्मान् (अग्र-णीः-अग्निः) चरितार्थयति च तद् अन्ततः । एवञ्चाय कस्यापि लक्ष्यस्य सिद्धयै सर्वप्रथममपेक्षिता, तस्य मूर्तरूपदायिनी प्रधानशक्ति ।

यदा मनुष्योऽज्ञानान्धकारात् प्रबुद्धो भूत्वा सत्यतरोच्चतरजीवन निर्मातुमना तादृशजीवनप्रदायिनो देवान् प्रति सर्वाण्यपि स्वकार्याणि, बाह्याभ्यान्तराणि च, समर्पयितुम् इच्छति, एवञ्च मर्त्यताया निर्गत्य अभीष्ट लक्ष्यभूतञ्च ऊर्ध्वस्थममृतत्वमारोढुमिच्छति तदा तेन ऊर्ध्वाकाङ्क्षिसकल्पस्य प्रथमग्निः, उच्चाभीप्सात्मकशक्तेरियं ज्वाला प्रज्वालनीया निजान्तरे, अस्यामेव चाहुतिर्देया सर्वकर्मणाम्, समर्पणीयं सर्वम् । यदाऽसौ सचेतनः सन् अस्यां स्वकर्माहुतिं जुहोति, स्वकार्याणि सर्वाणि अस्यां समर्पयति तदाऽयं प्रादुर्भूय पुरतः प्रकाशते ।

सोऽयमग्निदेवोऽस्मज्जीवनस्य घोरतमरात्रावपि जागर्ति, अस्माकं निश्चेतनाऽर्द्धचेतनसत्ताया गहनान्धकारेऽपि दिव्यसंकल्पज्वालारूपेण प्रकटो भवति । यदा वयं मनसः चेतनाऽऽलोकं, सचेतनप्रकाश क्वचिदपि न पश्यामो मार्गदर्शकतया, तदाप्ययं निर्भ्रान्तकर्मा नित्यजागरूकोऽग्निस्तत्र क्रियारतो भवति । अन्ये देवास्तावत् 'उषर्बुधः', उदितायां ज्ञानोषसि अन्तर्ज्योतिषि च अस्मासु बुध्यन्ते, अयन्तु तिमिरावृतमस्मदन्तर निर्भिद्य प्रकाशयति प्रथमतः ।

तदेवम् अग्निरेव अस्मदन्तरस्थपरमदेवस्य प्रथमं प्रधानञ्च जाग्रद्रूपम् । यदि वयं तं हृदयवेदौ प्रज्वलित, प्रकाशितम्, उन्मुक्तमूर्ध्वगामिनञ्च कर्तुं शक्नुयाम तर्हि स नो मानवचैतन्ये दैवीमुषसमानीय, अस्मासु देवताः प्रबोध्य, अनृताऽज्ञान–निरानन्द–वैफल्यानाम् कृष्णावरण निवार्य च अस्मान् अमरान् दिव्यांश्च करिष्यति ।

## अग्नेर्जन्म

अयमस्मास्क देहे, अस्मत्पार्थिवसत्तायां निगूढस्तिष्ठति–'कामो[1]हृच्छय सर्वभूतानाम्' । अरणिनिर्मथनाज्जायमानः स्थूलाग्निरिवाय देहमनसोरधरोत्तरारण्योः संयोगेनोत्पद्यते । उत्तरारणे अधरेण घर्षणात्, तस्मिन् आघातात् तत्प्रभावाच्च जन्यतेऽयम् । पूर्वमय प्राणगतसकल्परूपेण जीवनेच्छारूपेण वा जागर्त्ति ततश्च मनसि प्रादुर्भवन् शुद्धः सञ्जायते ।

ऋग्वेदे एतत सत्यम् इत्थमुपवर्णितम्––मानवस्य हृदये यो 'मर्त्येष्वमर्त्यः' परमो देवः प्रसुप्तस्तिष्ठति तं सर्वप्रथमम् अथर्वा एव निर्मथ्य आविष्करोति,

---

१ कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथम यदासीत् ऋ० १०.१२९.४

हृदि क्रतुमान् । ऋ० ४ ४१.१

'इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः ।'
ऋ० ६।१५।१७॥

अन्यत्रापि एकस्मिन् मन्त्रे एवमुक्तम्--
सर्वेषामपि देवभक्तानां पुष्करारुयात् शिरः-कमलात् अथर्वा अग्नि निर्मथितवान् 'त्वामग्ने पुष्करादध्यथर्वा निरमन्थत मूर्ध्नो विश्वस्य वाघतः ॥'
ऋ० ६।१६।१३॥

अस्मास्वन्तर्हितो देवो यदा प्रथमतः सुप्तोत्थितो भवति तदाऽस्माकं हृदये भगवदभीप्साया ज्वाला, भगवत्प्राप्तेस्तीव्रा उत्काङ्क्षाऽनुभूयते । उद्बुध्यमानस्य अग्निदेवस्य सा प्रथमा ज्वाला अथर्वा इत्युच्यते, न थर्वतीति अथर्वा स्थिरा निस्स्पन्दा च ज्वालेत्यर्थ । तथा हि अग्नेः, भागवतसङ्कल्पाग्नेः प्रकाशपूर्णसङ्कल्पशक्तेर्वा सप्त ज्वालाः, ज्वालामयशक्तयो वा भवन्ति या सप्त अङ्गिरस उच्यन्ते, तेषु सप्ताङ्गिरस्सु प्रथमोऽथर्वा । सोऽङ्गिरसामग्रगण्यः । सोऽयमथर्वा यदा मानवसत्तायां पदं लभते तदा स दिव्याग्नेः सम्पदः आविष्करोति क्रमशः ।

अन्तयज्ञे साधनापथे दिव्यप्रकाश-प्रापकं मार्गं सर्वप्रथमम् अथर्वा, अग्नेर्ज्वाला-विशेष एव रचयति अन्तःसाधनैः--

यज्ञैरथर्वा प्रथमं पथस्तते ।
ऋ० १।८३।५ ॥

एवञ्च यदाऽसौ सुप्तोत्थित इव ज्वलत्पूर्ध्वमुख तदा अन्तर्यज्ञपरस्य यजमानस्य यज्ञ (साधना) भारं स्वयं परिगृह्य तदर्पित हविः, तत्प्रदत्तं सर्वस्वं देवान् प्रापयति यथाप्रागम् । यजमानश्च तेन सर्वस्वसमर्पणरूपेण हविर्दानेन देवान् प्रति अनृणो भूत्वैव यजनसमर्थो जायते, न तत प्राक् । तथा चाहुर्ब्राह्मणानि--

'आत्मानं निष्क्रीयाऽनृणो भूत्वाऽथ यजते ।'
कौषीतकि ब्राह्मणम् १०। ३ ॥

'सर्वाभ्य एव देवताभ्यो यजमान आत्मानं निष्क्रीणीते ।'
ऐतरेय ब्राह्मणम् २। ६। ३ ॥

## अग्नेः प्रदीपनस्य फलम्

यथा यथा च यजमान इममग्निं पुन पुनः प्रदीपयति तथा तथा अयमूर्ध्वादूर्ध्वतर धाम (चैतन्यभूमिम्) आरोहति आरोहयति च यजमानम् । 'मर्त्येष्वमर्त्य', 'अतिथि' (अर्थात् सततगमनशीलः, अतनादतिथिः, अत सातत्यगमने), 'सप्तजिह्वः', उत्तरोत्तरप्रखरायमाण--सप्तजिह्वाभिरुपेत, तद्द्वारा च सप्तधामाधिगामी सप्तविधचिद्भूमिकाधिरोही अयमग्निदेवः अस्माद भूलोकात्, अन्नमयसत्तायाः प्रस्थाय दिवम् (दिव्यचिद् भूमिम्) आरोहति यथाक्रमम्, अवतारयति च तत प्रतिफलरूपेण निखिलमपि आध्यात्मिकैश्वर्यम् दिव्या ज्ञानधाराः, ज्योतिः, शक्तीः, दिवः, वृष्टीश्च । तथा हि दिवसारूढे अग्नौ तत्सत्कारपुरस्काररूपेण दिवस्पतिः, दिव्यमनोऽधिपतिरिन्द्रोऽपि दिव्यालोकद्युतिभिः (विद्युद्भिः, विद्युद्देवताभि ) सह अवरोहति, 'पर्जन्य'--देवरूपेण च अभीष्टजीवनदानैर्वर्षति ('वृषा'), दिव्यजीवनस्य प्रकाशस्य चावरणभूतान् वृत्रादीनसुरान् निषूदयति, प्रतिबन्धकावरणानि अपवार्य च परं सत्यमुद्भासयति, सत्यस्य सूर्यं साक्षात्कारयति ।

तदेतत् सत्य साक्षात्कर्तुमेव अन्तरे दिव्यसङ्कल्पाग्निः प्रदीप्यते । प्रदीप्ते च तस्मिन् ज्ञानशक्तिमयजाज्वल्यमानाऽग्नौ स्वतुच्छसुखदुःखानि, क्षुद्रचेष्टा-विफलताः, अज्ञानं मिथ्यात्वं मृत्युश्च हूयन्ते, येन सर्वमपि पुरातनमनृतञ्च भस्मीभवेत्, अथ च यत्किमपि नवीनं सत्यञ्च तदत्र प्रादुर्भवेत् ।

(क्रमशः)

# सम्पादकीय टिप्पण्यः

### कच्छ का रन

सर्वसाधारणजनानामय चर्चाविषयो यत् 'कुच्छ का रन' प्रदेशस्योच्चभूमिभागोऽन्ताराष्ट्रिय-न्यायाधिकरणेन पाकिस्तानाय प्रदत्त पङ्कमयत्वा-ज्जनैरगम्योऽवशिष्टो भागा भारतवर्षस्य भाग्य स्फोटनाय भारतायोपायनीकृत । दुर्बलस्य न काऽपि भवति वन्धुर्दैवोऽपि दुर्बलघातक इति सूक्तिरप्यत्रैव चरितार्थता गता । श्रणु र मूढ ! भाग्य हतक ! किमर्थ रोदिषि ? श्रृणु काश्मीरोऽपि यास्यति आसामप्रदेशा न स्थास्यति नागालैण्डोऽपि पला यिष्यते, न जान, क क प्रदशा पृथग्भवितुमुद्यता सन्ति । अहमह मममत्यहमहमिकया स्वार्थान्धा सन्त स्वशिरसि चक्रवद्भ्रमन्त मृत्युमपि न पश्यन्त्यत दैवहतका भारतीया । अद्यापि स्वतन्त्र ताफल पूर्णरूपेण न प्राप्त पर स्वस्वोदरदर्या प्रक्षेप्तुमुद्यता बहुषु दलेषु विभक्ता परस्योन्नतिम् सहमाना ईर्ष्याभावभरिता कुरुपाण्डवीयमाचरितु सतत बद्धपरिकरा अवलोक्यन्ते भारतीया । श्री कामराज–सुब्रह्मण्य–अन्नादुराई–राजगोपालाचार्या-दिभ्यो दाक्षिणात्यनेतृभ्योऽन्यत् किञ्चिदपि कार्य कर्तु नावशिष्टमृते भाषाविवादात् । आग्लभाषाया अनिवार्यता वाञ्छन्त्येते समग्रेऽस्मिन् भारते । अधुना भारत श्रूयमाण सर्व विवादजात भारतीय-संस्कृति प्रति भारतमातर प्रति प्रेमाभाव व्यनक्ति । भोः ! भो. ! नेतार श्रृणुत, भारतमातरमत्तु मुख विदार्य वृका समन्तात् परिभ्रमन्ति । इम श्रुत्युपदेश धारयत सगच्छध्व सवदध्व स वो मनासि जानताम्' इति ।

### उपाध्यायो न हतोऽपितु धर्म एव हतः

श्रुतचर भवद्भिर्वृत्तपत्रेषु च पठित यज्जन-सघस्याध्यक्षपदमलङ्कुर्वत श्रीउपाध्यायदीनदयाल-महादयस्य हत्या धूम्रयानयात्रावसार शकटाभ्यन्तर एव कनापि धमध्वसिनाऽसुरेण विहितेति चिन्त-चिन्त भृश खिद्यते नश्चेत । नेय राजनीतिकहत्या । उपाध्याया न हताऽपितु धर्मएव हत । उपाध्याया विद्याविनयसम्पन्न समदर्शी परोपकारपरायणा निर्लोभो दरिद्रोऽप्रतिद्वन्द्वी तपस्त्यागागाधमूर्तिरव न जाने कियन्तोऽन्य गुणा अन्तस्तलाद बहिरागन्तुमह पूर्वमह पूर्वमित्यहमहमिकया बद्धपरिकरा भवन्ति स्म । राजनीतिकक्षत्रऽद्वितीयसगठनशक्तिमादधा नाऽपि शान्तिपरायणा धर्मप्रिय एव।सीत् स महा जन । न कस्याप्यप्रियकरोऽहितचिन्तका वाऽऽसीत् तदाश्चर्य कन हेतुना हताऽयमजातशत्रु ? अस्म-न्मते कारणमिद भवितुमर्हति यद हिन्दुष जागर्ति न भवन् तेषा सगठन वा वृद्धिन जायत । भारत वर्ष पुनरेकसूत्रतायामावदधु यत्र कनापि यत्प्रयत्न जात विधीयते वेवाऽपि सन्नसौ हन्तव्य एवति राद्धान्तस्तेषा कलितमानवदेहाना हिसाऽसूयेर्ष्यादि दुर्गुणगणानाम् । यदि राजनीतिकदृष्ट्या वा दलदृष्ट्या वाऽविमृश्यकारिणो हिन्दएवात्र कारण नदैषा हत्या हिन्दुधर्मायापशकुनमित्यूहाम । मन्य ! न कस्याप्यकस्य दैवहतकस्य कायमतत । भारत मातर खण्डश कर्तमद्यताना बहूनामासुरकीट किट्टाना कदर्याणा पातकमतत् ।

सर्वसर्जनकर्ता परमप्रभुरेवात्र प्राथ्यते यत् पुन रपि श्री उपाध्यायमहाभागोऽत्र भारत जनिमाप्नु यात् येनासौ भारत सर्वजगति भासयितु प्रयतेत ।

### शिवरात्रि पर्व––बोधोत्सवः

शिवरात्रिपर्वणो हिन्दुषु विशेषत शैवजनष्व तीव महत्त्व विद्यत । शिवभक्तेषु लब्धजन्मा स्वामिवर्य श्री दयानन्दसरस्वतीमहाभागोऽप्यस्मिन

पर्वणि बोधमवाप । अस्याः रात्रौ शिव स्वकीय सत्यस्वरूप दयानन्दात्मनि ममदब धय मास तदनन्तर शिवस्य प्रेरणयैवाजन्मब्रह्मचर्य तपश्चर्या कष्टसहिष्णुत्व योगावाप्ति शिवस्य साक्षात्कार मित्यादीन्यन्यान्यपि सद्धर्मजातान्यधिगन्तु प्रायतत महर्षिरसौ दयानन्द । न केवल महर्षिपदवाच्योऽसौ दयानन्द प्रत्युत शिवस्यैव साक्षादवतार आसीदित्यस्त्यस्माक दृढा विश्वास । भगवत शिवस्य रूपद्वय वेदेषु प्रथित विद्यते घोररूप शिवरूप च । यजुर्वेदस्य षोडशाध्याये प्रपञ्चितमेतद् रूपद्वय । वस्तुतस्तु रुद्रस्य घोररूपमेवाभिमन्तव्यम् । यतो हि घोरात्मकस्य तस्य क्रियाजन्यपरिणाम शिवत्व प्रतनोति, अतः शिवरूपोऽप्यसौ मन्यते । यदि जातस्य मृत्युर्न भवेत् तदाऽनर्थपरम्पराया कदापि विलोपो न स्यात् । अतो मृत्यु परिणामे शिव । भारतवर्षे "बहुप्रजानिऋतिमाविवेश" श्रुत्युक्तिरेषा भृश रुद्रस्यावश्यक्ता बोधयति । युद्धमेव समीचीन पन्थाः प्रजाना सक्षेपाय भारतीयजीवने बद्धमूलाना महाव्याधिरूपाणा दुर्गुणगणानाञ्च समुन्मूलनायेति ब्रुवते केचन युद्धैकभेषजाभिमानिनो नरपुगवा । यद्यधुना शिव स्वनृत्य प्रदर्शयेत् तदा भारतपाकिस्तान चीनादिदेशाना महत् कल्याण भवेदित्यभियुक्ताना विचारसरणि । स्वामिदयानन्देनापि पाखण्डखण्डनमसत्यमतमतान्तरेषु प्रहारश्चाकारि । शिक्षाराजनीत्यादिसकलक्षेत्रेषु पन्थानमवलम्ब्य भारतमुन्नति कर्तुं पारयतेऽसावपि तेन प्रदर्शित । अतोऽधुना स एव पन्था अस्माभिरनुसरणीयस्तदैव भद्र शिव च भविष्यति नो चेत् महती विनष्टि सम्पत्स्यते ।

# साहित्य-समीक्षा

**( समालोचनार्थं पुस्तकद्वयं पत्रिका-कार्यालये प्रेषणीयम् )**

## पूर्व और पश्चिम

लेखक —श्री नित्यानन्द पटेल

प्रकाशक —श्री गोविन्दराम हासानन्द, नई सडक दिल्ली पृष्ठसख्या १६२, मूल्यम ७ ५०

हिन्दीभाषायामुपनिबद्ध निबन्धात्मक पुस्तकमिद विद्वद्वर्येण श्रीनित्यानन्दपटेलमहाभागन विरचितम् । पुस्तकस्य नामनि पूर्वशब्देन प्रायो भारतवर्षस्यैव तात्पर्यमित्यूह्यम् । भारतपश्चिमयो शिक्षाऽर्थसमाजादिक्षेत्राणा तुलनात्मक विवेचनमत्र साधु सम्पादित विदुषा लेखकेन । स्वतन्त्रतावाप्त्यनन्तर भारतवर्षस्य नवनिर्माण द्रुतगत्या प्रारब्धमवत्यैर्नेतृवर्गै । नानाविधा आयोजना आयोज्यन्ते पर भौतिकताया प्राबल्यात् अन्येभ्यो राजनीतिककारणेभ्यश्च यत्र तत्र महान् सङ्घर्षो दिग्भ्रान्ति पदे पदे स्खलनमित्यादीनि पतनसाधानान्यपि व्युत्पाद्यन्तेऽस्माभि । पूर्वैः पथिकृद्भिर्महर्षिसघै प्रतिपादितेनादर्शेन सह पाश्चात्यसभ्यताया कथ कीदृक् कियच्च मेलन भारतवर्षस्योन्नत्यै साध भविष्यति तदत्र सम्यक्तया प्रतिपादितम । नैतदावश्यक यल्लेखकस्य सर्वे विचारा सर्वेभ्या नून सग्राह्या भवेयुस्तत्र मतवैपरीत्य भवितुर्महति । महाव्याधिग्रस्तोऽय भारतदेश । न केवलमुपदेशगुटिका चमत्कार जनयिष्यति । सुवर्णशुद्धिमिव तापसस्पर्शोऽप्यावश्यक । अत्र पुस्तके निम्नविषयानुपजीव्य निबन्धा सकलिता (१) आध्यात्मिकता या अर्थपरायणता (२) नैतिकता मे आगे कौन (३) हमारी नैतिक दुर्बलता (४) नैतिक बल

(४०४तमे पृष्ठेऽवशिष्टाश )

"श्री गंगा सभा, हरिद्वार" द्वारा 'मालवीय जयन्ती १९६७' में प्रथम पुरस्कृत निबन्ध—

# भारत की संस्कृति भारत की एकता की संयोजिका है

श्री महावीर 'नीर' विद्यालकार, एम. ए.

## भूमिका

जैसे किसी चित्र-विचित्र वर्ण वाले उद्यान मे पहुच कर दर्शक उन सुमनो की रगविविधता से यह समझ बैठता है कि इस विशाल उपवन मे एकीभाव नही है, ठीक उमी प्रकार इस विशाल भारत-राष्ट्र की अनेक-विध विचित्रताओं को देखकर प्राय विद्वान् यह समझ लेते है कि यहा एकता का अभाव है । इसका कारण है—समस्त भारतीय जनमानस मे बहने वाले उस विचार को न जानने का अभाव जिससे यह अविरल गतिशील है ।

तथ्यपूर्ण बात तो यह है कि प्रत्येक राष्ट्र के अपने कुछ मूलभूत तत्त्व होते है, जिनसे वे स्थापित रहते हैं । गतिमय रहते है । बहुत से विद्वान् यह भूल करते है कि 'राष्ट्र' और 'राज्य' में कोई भेद नही । वे उन्हे अभिन्न समझते है, जब कि उनमे मौलिक भेद है । 'राज्य' का कार्य शासन करना है जबकि 'राष्ट्र' उसके आन्तरिक तत्त्वों को पोषित करता है । 'राज्य' भौतिक सीमायें निर्धारित करता है जबकि राष्ट्र आन्तरिक। और इन्ही आन्तरिक चेतनाओं से अभिभूत राष्ट्र-जन पुकार कर कह उठते हैं "माता भूमिः पुत्रो अहं पृथिव्याः ।"

हमारे भारतीय दर्शन में राष्ट्र को एक 'देवता' के रूप मे सम्बोधित किया गया है । ऋग्वेद मे तो इस राष्ट्रीय-देवता की प्रचुर उपासना की गई है । अथर्ववेद का सम्पूर्ण (१२।१) भूमि-सूक्त आदर्श राष्ट्र की कल्पना का एक मनोरम चित्र है । अत. राष्ट्र का महत्त्व सर्वोपरि है । 'राज्य' जहा शस्त्र और सेना के बल पर विघटित किये जा सकते हैं, वहां राष्ट्र नहीं । कारण है—राष्ट्र किन्ही आन्तरिक भावनाओं, मर्यादाओं और आदर्शों से निर्मित होते हैं । राष्ट्र की ये मर्यादाये, भावनाये एव आदर्श ही उसकी संस्कृति होते है । इसे हम राष्ट्र की आत्मा कह सकते है जो राष्ट्र को एकसूत्र में पिरोये रखती है । यही कारण है कि हमारा भारत-राष्ट्र और उसमें रहने वाले प्रजा-जन एक अन्त.संस्कृति से सवेष्टित हैं । इसमे कोई सन्देह नहीं ।

## संसार को एकता का पाठ पढ़ाने वाली संस्कृति :—

संसार मे बडे-बडे साम्राज्य बने । डेढ़ सहस्त्र वर्ष तक सारे ईसाई संसार मे रोमचर्च और लैटिन भाषा का साम्राज्य रहा । रोम का सितारा भी कभी बुलद था । संसार की आखे एक दिन ग्रीस पर भी लगी थी । सिध से स्पेन तक इस्लाम का विशाल साम्राज्य विद्यमान था । किन्तु कहा गये वे विशाल साम्राज्य ? जो अपनी सस्कृति और सभ्यता का दम्भ भरते थे । जिनके अरस्तु, प्लेटो और सुकरात ससार के महान् सत्यशोधक समझे जाते थे । जिनके कैरो, और अल-अजहर जैसे विशाल विद्याकेन्द्र अरब-सस्कृति का ज्ञान कराते थे । जो गणित और ज्योतिष का पाठ पश्चिमीय देशो को पढाते रहे ।

उत्तर स्पष्ट ही है । काल की कुटिलता के आगे वे भी टिक न सके । उनकी विशाल सभ्यता और संस्कृति दूसरों की दास ही गयी । किन्तु

